निर्देशः सूत्र आश्रयितुम् । इह संपरिभ्यां भूषणसमवाययोः करोताविति इहैव स्यात् संस्करोति संस्कर्ता संस्कर्तुमित्यत्र न स्यात्* ॥ न ब्रूमो ऽस्मादुकारान्तनिर्देशाद्योऽयं करोतेरिति । किं तर्हि । उकारप्रकरणादुकारान्तमङ्गमभिसंबध्यते । उत इति† वर्तते । यद्येवं नार्थः सार्वधातुकग्रहणेन । कस्मान्न भवति संचस्करतुः संचस्करुरिति । उत इति वर्तते ॥ उत्तरार्थं तर्हि सार्वधातुकग्रहणं कर्तव्यम् । श्नसोरल्लोपः [१११] इति । श्नम्सार्वधातुक एव । अस्तेरप्यार्धधातुके भूभावेन भवितव्यम्‡ ॥ उत्तरार्थमेव तर्हि । श्नाभ्यस्तयोरातः [११२] इति । श्ना सार्वधातुक एव । अभ्यस्तमप्याकारान्तमार्धधातुके नास्ति§ । ननु चेदमस्ति अप्सु यायावरः¶ प्रवपेत पिण्डानिति । नैतदाकारान्तम् । यकारान्तमेतत् ॥ उत्तरार्थमेव तर्हि । ई हल्यघोः [११३] इति । तत्रापि श्नाभ्यस्तयोरित्येव ॥ अतोऽप्युत्तरार्थमेव तर्हि । इद्दरिद्रस्य [११४] इति । वक्ष्यत्येतद्दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति** ॥ अतोऽप्युत्तरार्थम् । भियोऽन्यतरस्याम् [११५] । अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थमेव । जहातेश्च [११६] । अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थम् । आ च हौ [११७] । हावित्युच्यते । अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थम् । लोपो यि [११८] । अभ्यस्तस्येत्येव ॥ अतोऽप्युत्तरार्थम् । घ्वसोरेद्धावभ्यासलोपश्च [११९] इति । हावित्युच्यते ॥

तदेव तर्हि प्रयोजनं श्नसोरल्लोप इति । ननु चोक्तं श्नम्सार्वधातुक एव अस्तेरप्यार्धधातुके भूभावेन भवितव्यमिति ।

अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः ।

अनुप्रयोगे तु भुवास्तेरबाधनमिष्यते । ईहामास ईहामासतुः ईहामासुरिति ॥ किं च स्याद्यद्यत्र लोपः स्यात् ।

लोपे द्विर्वचनासिद्धिः

लोपे कृतेऽनच्कत्वाद्विर्वचनं न स्यात् ॥ स्थानिवद्भावाद्भविष्यति ।

स्थानिवदिति चेत्कृते भवेद्द्वित्वे ।

कृते द्वित्वे लोपः प्राप्नोति ॥ अस्तु तर्हि परस्य लोपः । अभ्यासस्य योऽकारस्तस्य दीर्घत्वं भविष्यति†† ॥

नैवं सिध्यति कस्मात्प्रत्यङ्गत्वाद्भवेद्धि पररूपम् ।

नैवं सिध्यति । कस्मात् । प्रत्यङ्गत्वात्पररूपं प्राप्नोति‡‡ ।

---

* ६. १. १३७; १३८. † ६. ४. १०६. ‡ २. ४. ५२. § ६. ४. ६४.
¶ ३. २. १७६; ६. ४. ४८; ६. १. ६६. ** ६. ४. ११४*. †† ७. ४. ७०. ‡‡ ६. १. ९७.

**तस्मिंश्च कृते लोपः**

पररूपे च कृते लोपः प्राप्नोति ।

**दीर्घत्वं बाधकं भवेत्तत्र ॥**

अत आदेः [७.४.७०] इति दीर्घत्वं बाधकं भविष्यति ॥

इदं तर्हि प्रयोजनं सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यात् । कुर्वितिं* ॥

## श्नसोरल्लोपः ॥ ६ । ४ । १११ ॥

अथात्र तपरकरणं किमर्थम् । इह मा भूत् । आस्ताम् आसन् ॥ नैतदस्ति प्रयोजनम् । आटो† ऽसिद्धत्वान्न भविष्यति ॥

## इद्दरिद्रस्य ॥ ६ । ४ । ११४ ॥

दरिद्रातेरार्धधातुके लोपः ॥ १ ॥

दरिद्रातेरार्धधातुके लोपो वक्तव्यः ॥

सिद्धश्च प्रत्ययविधौ ॥ २ ॥

स च सिद्धः प्रत्ययविधौ । किं प्रयोजनम् । दरिद्रातीति दरिद्रः‡ । आकारान्तलक्षणः§ प्रत्ययविधिर्मा भूदिति ॥

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥

वाद्यतन्याम् ॥ ३ ॥

अद्यतन्यां वेति वक्तव्यम् । अदरिद्रीत् अदरिद्रासीत् ॥

## अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६ । ४ । १२० ॥

णकारषकारादेशादेरेत्त्ववचनं लिटि ॥ १ ॥

णकारषकारादेशादेरेत्त्वं लिटि वक्तव्यम् । नेमतुः नेमुः । सेहे सेहाते सेहिरे¶ ।

---

* ६. ४. १०६; (१. १. ६२). † ६. ४. ७२. ‡ ३. १. १३४. § ३. १. १४१; ७. ३. ३३.
¶ ६. १. ६९; ६४.

किं पुनः कारणं न सिध्यति । अनादेशादेरिति प्रतिषेधः प्राप्नोति ॥ तर्हि वक्तव्यम् । न वक्तव्यम् । लिटात्रादेशादिं विशेषयिष्यामः । लिटि य आदेशादिस्तदादेर्नेति ॥ अस्त्यन्यल्लिङ्ग्रहणस्य प्रयोजनम् । किम् । इह मा भूत् । पक्ता पक्तुम् । नैतदस्ति प्रयोजनम् । क्ङितीति[*] वर्तते । एवमपि पक्वः पक्ववानित्यत्र प्राप्नोति । अभ्यासलोपसंनियोगेनैत्त्वमुच्यते न चात्राभ्यासलोपं पश्यामः । एवमपि पापच्यते अत्र प्राप्नोति । दीर्घत्वमत्र बाधकं भविष्यति[†] । नाप्राप्ते ऽभ्यासविकार एत्त्वमारभ्यते तद्यथान्यानभ्यासविकारान्बाधत एवं दीर्घत्वमपि बाधेत । सत्यमेवमेतत् । अभ्यासविकारेष्वपि तु ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति । तत्र ह्रस्वहलादिशेषावुत्सर्गौ[‡] तयोर्दीर्घत्वमपवाद एत्त्वं च । अपवादविप्रतिषेधाद्दीर्घत्वं भविष्यति ॥ इह तर्हि बभणतुः बभणुरित्यभ्यासादेशस्यासिद्धत्वादेत्त्वं प्राप्नोति[§] ।

फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य ॥ २ ॥

यदयं फलिभज्योर्ग्रहणं करोति[¶] तज्ज्ञापयत्याचार्यः सिद्धोऽभ्यासादेश एत्त्व इति ॥ यद्येवं

प्रथमतृतीयादीनामादेशादित्वादेत्त्वाभावः ॥ ३ ॥

प्रथमतृतीयादीनामपि[**] तर्ह्यादेशादित्वादेत्त्वं न प्राप्नोति । पेचतुः पेचुः । देमतुः देमुः ॥

न वा शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेद एत्त्वविज्ञानस्य ॥ ४ ॥

न वैष दोषः । किं कारणम् । शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेद एत्त्वविज्ञानस्य । यदयं शसिदद्योः प्रतिषेधं शास्ति[††] तज्ज्ञापयत्याचार्यो रूपाभेदेन य आदेशादयो न तेषां प्रतिषेधो भवतीति ॥

दम्भ एत्त्वम्

दम्भ एत्त्वं वक्तव्यम् । देभतुः देभुः ॥ किं पुनः कारणं न सिध्यति ।

नलोपस्यासिद्धत्वात् ॥ ५ ॥

असिद्धो नलोपस्तस्यासिद्धत्वादेत्त्वं न प्राप्नोति[‡‡] ॥

नशिमन्योरलिट्येत्त्वम्

नशिमन्योरलिटचेत्त्वं वक्तव्यम् ॥

---

[*] ६. ४. ९८. [†] ७. ४. ८३. [‡] ७. ४. ५९; ६०. [§] ८. ४. ५४; ८. २. १.
[¶] ६. ४. १२२. [**] ८. ४. ५४. [††] ६. ४. १२६. [‡‡] ६. ४. २४; २२.

छन्दस्यमिपचोरपि ।

छन्दस्यमिपचोरपीति वक्तव्यम् ॥ किं प्रयोजनम् ।

अनेशं मेनकेत्येतद्व्येमानं लिङि पेचिरन् ॥ १ ॥

यज् आयेजे वप् आवेपे दम्भ एत्त्वमलक्षणम् ।

असिद्धत्वान्नलोपस्य दम्भ एत्त्वं न सिध्यति ॥

असोरत्त्वे तकारेण* ज्ञाप्यते त्वेत्त्वशासनम् ॥ २ ॥

अनित्योऽयं† विधिरिति ॥

## थलि च सेटि ॥ ६ । ४ । १२१ ॥

थल्ग्रहणं किमर्थम् ।

थल्ग्रहणमकिदर्थम् ॥ १ ॥

थल्ग्रहणं क्रियतेऽकिदर्थम् । आकित्येत्त्वं यथा स्यात् । पेचिथ शेकिथ ॥ नैतदस्ति प्रयोजनम् । सेड्ग्रहणमेवात्राकिदर्थं भविष्यति ॥ इदं तर्हि प्रयोजनं समुच्चयो यथा विज्ञायेत । थलि च सेटि किति च सेटीति । किं प्रयोजनम् । पेचिव पेचिम । तत्र पचादिभ्य इड्वचनमिति वक्ष्यति‡ तन्न वक्तव्यं भवति ॥

इह कस्मान्न भवति । लुलविथ । गुणस्य प्रतिषेधात्§ । इहापि तर्हि न प्राप्नोति । पेचिथ शेकिथ । गुणस्य योऽकार इत्येवमेतद्विज्ञास्यते । एवमपि शशरिथ अत्र प्राप्नोति । गुणस्यैषोऽकारः । कथम् । वृद्धिर्भवति गुणो भवतीति रेफशिरा गुणवृद्धिसंज्ञको ऽभिनिर्वर्तते । अथवाचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामेत्त्वं भवतीति यदयं तॄफलभजत्रपश्च [६.४.१२२] इति तॄग्रहणं करोति ॥

## राधो हिंसायाम् ॥ ६ । ४ । १२३ ॥

राधादिषु स्थानिनिर्देशः ॥ १ ॥

राधादिषु स्थानिनिर्देशः कर्तव्यः ॥ न कर्तव्यः । एकहल्मध्य इति¶ वर्तते ।

* ६. ४. १११. † ६. ४. २२. ‡ ७. २. ६२*. § ६. ४. ११६.
¶ ६. ४. १२०.

यद्येवं नेसतुः नेसुः रशब्दस्यैत्त्वं प्राप्नोति । अस्तु । अलोऽन्त्यस्य* विधयो भवन्तीत्यकारस्य भविष्यति । अनर्थकेऽलोऽन्त्यविधिर्नेत्येवं न प्राप्नोति । नैतस्याः परिभाषायाः सन्ति प्रयोजनानि । अथवात इति† वर्तते । एवमपि राधेर्न प्राप्नोति । आकारग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् । श्नाभ्यस्तयोरातः [६. ४. ११२] इति । अथवा श्नसोरल्लोपः [१११] इत्यत्र तपरकरणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते । यदि तदनुवर्तते ऽत एकहल्मध्येऽनादेशादेर्लिटि [१२०] अस्य चेत्यवर्णमात्रस्यैत्त्वं प्राप्नोति । ववाधे । अकारेण तपरेणावर्णं विशेषयिष्यामः । अस्यात इति । इहेदानीमस्येत्यनुवर्ततेऽत इति निवृत्तम् ॥

## अर्वणस्त्रसावनञः ॥ ६ । ४ । १२७ ॥

## मघवा बहुलम् ॥ ६ । ४ । १२८ ॥

**अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।**

अर्वणस्तृ मघोनश्च न शिष्यम् । किं कारणम् । छान्दसं हि तत् । दृष्टानुविधिश्छन्दसि भवति ॥

**मतुब्वन्योर्विधानाच्च**

मतुब्वनी खल्वपि च्छन्दसि विधीयेते‡ ॥

**छन्दस्युभयदर्शनात् ॥**

उभयं खल्वपि च्छन्दसि दृश्यते । इमान्यर्वणः पदानि । अनर्वाणं वृषभं मन्द्रजिह्वम् ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

---

* १. १. ५२. † ६. ४. १२०. ‡ ५. २. १०९*.

## पादः पत् ॥ ६ । ४ । १३० ॥

### पाद उपधाह्रस्वत्वम् ॥ १ ॥

पाद उपधाह्रस्वत्वं वक्तव्यम् । द्विपदः पश्य ॥

### आदेशो हि सर्वादेशप्रसङ्गः ॥ २ ॥

आदेशे हि सति सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत येन विधिस्तदन्तस्य [१.१.७२] इति* ॥ तर्हि वक्तव्यम् ।

### न वा निर्दिश्यमानस्यादेशत्वात् ॥ ३ ॥

न वा वक्तव्यम् । किं कारणम् । निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा कर्तव्या ॥ कः पुनरत्र विशेष एषा वा परिभाषा क्रियेतोपधाह्रस्वत्वं वोच्येत । अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि ।

### प्रयोजनं सुप्तिङादेशे ॥ ४ ॥

सुप् । कुमार्याम् किशोर्याम् । खट्वायाम् मालायाम् । तस्याम् यस्याम् । आड्याट्स्याट्सु कृतेषु साड्याट्स्याट्कस्याम्प्राप्नोति† । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । इदमिह संप्रधार्यम् । आड्याट्स्याटः क्रियन्तामामिति किमत्र कर्तव्यम् । परत्वादाम् । नित्या आड्याट्स्याटः । कृतेऽप्यामि प्राप्नुवन्त्यकृतेऽपि । अनित्या आड्याट्स्याटः । अन्यस्य कृत आमि प्राप्नुवन्त्यन्यस्याकृते शब्दान्तरस्य च प्राप्नुवन्तो ऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादाम् ॥ इदं तर्हि । तस्यै यस्यै । स्याटि कृते सस्याट्कस्य स्मैभावः प्राप्नोति‡ । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति । स्याटा व्यवहितत्वात् । सुप् ॥ तिङ् । अरुदिताम् अरुदितम् अरुदितेति । इटि कृते सेट्कस्य ताम्तम्तामादेशाः प्राप्नुवन्ति§ । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । इदमिह संप्रधार्यम् । इट् क्रियतां ताम्तम्ताम इति किमत्र कर्तव्यम् । परत्वादिडागमः । अन्तरङ्गास्ताम्तम्तामः ॥ इदं तर्हि । क्रियास्ताम् क्रियास्तम् क्रियास्त । यासुटि¶ कृते सयासुट्कस्य ताम्तम्तामः प्राप्नुवन्ति । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥

---

* १. १. ५५. † ७. ३. ११२; ११३; ११४; ११६. ‡ ७. १. १४.
§ ७. २. ७६; ३. ४. १०१. ¶ ३. ४. १०३; १०४.

### ल्यब्भावे च ॥ ५ ॥

ल्यब्भावे च प्रयोजनम् । प्रकृत्य प्रहृत्य । क्त्वान्तस्य ल्यप्प्राप्नोति* । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥

### त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च ॥ ६ ॥

त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च प्रयोजनम् । अतितिस्रः अतिचतस्रः । त्रिचतुरन्तस्य तिसृचतसृभावः प्राप्नोति† । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥ युष्मद् अस्मद् । अतियूयम् अतिवयम् । युष्मदस्मदन्तस्य यूयवयौ प्राप्नुतः‡ । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥ त्यदादिविकार । अतित्यः उत्तमस्यः । अत्यसौ उत्तमासौ । त्यदाद्यन्तस्य त्यदादिविकाराः प्राप्नुवन्ति§ । किमन्तस्य कादेशः प्राप्नोति¶ । अतिकः परमकः । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥

### उदः पूर्वत्वे ॥ ७ ॥

उदः पूर्वत्वे प्रयोजनम् । उदस्थाताम् । अटि कृते साट्कस्य पूर्वसवर्णः प्राप्नोत्युदः स्थास्तम्भोरिति** । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति । अटा व्यवहितत्वात् ॥

सा तर्ह्येषा परिभाषा कर्तव्या । न कर्तव्या । उक्तं षष्ठी स्थानेयोगा [१.१.४९] इत्येतस्य योगस्य वचने प्रयोजनं पष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारितेति†† ॥

## वाह ऊठ् ॥ ६ । ४ । १३२ ॥

ऊडादिः कस्मान्न भवति । आदिष्टिङ्भवतीत्याडिः प्राप्नोति‡‡ । संप्रसारणमित्यनेन यणः स्थानं ह्रियते§§ । यद्येवं

### वाह ऊड्वचनानर्थक्यं संप्रसारणेन कृतत्वात् ॥ १ ॥

वाह ऊड्वचनमनर्थकम् । किं कारणम् । संप्रसारणेन कृतत्वात् । संप्रसारणेनैव सिद्धम् । का रूपसिद्धिः पष्ठौहः पश्य ।

---

* ७. १. ३७. † ७. २. ९९. ‡ ७. २. ९३. § ७. २. १०६.
¶ ७. २. १०३. ** ६. ४. ७१; ८. ४. ६१. †† १. १. ४९*.
‡‡ १. १. ४६. §§ ६. ४. १३१; १. १. ४५.

गुणः प्रत्ययलक्षणत्वात् ॥ २ ॥

प्रत्ययलक्षणेन गुणो* भविष्यति ॥

एज्ग्रहणाद्वृद्धिः ॥ ३ ॥

एज्ग्रहणाद्वृद्धिर्भविष्यति† ॥

एवं तर्हि सिद्धे सति यदाह ऊठं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषासिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । किमेतस्य ज्ञापने प्रयोजनम् । पचावेदम् पचामेदम् । असिद्धत्वाद्बहिरङ्गलक्षणस्याद्गुणस्यान्तरङ्गलक्षणमैत्वं न भवतीति‡ ॥

## श्वयुवमघोनामतद्धिते ॥ ६ । ४ । १३३ ॥

श्वादीनां प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् ॥ १ ॥

श्वादीनां संप्रसारणे नकारान्तग्रहणं कर्तव्यम् । किं प्रयोजनम् । अनकारान्तप्रतिषेधार्थम् । अनकारान्तस्य मा भूत् । मघवता मघवते ॥ तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यादिति ॥ यत्तावदुच्यते नकारान्तग्रहणं कर्तव्यमिति न कर्तव्यम् ।

उक्तं वा ॥ २ ॥

किमुक्तम् । अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तदिति§ ॥ यदप्युच्यते तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यादिति लिङ्गविशिष्टग्रहणे चोक्तम् । किमुक्तम् । न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति¶ ॥ अथवोपरिष्टाद्योगविभागः करिष्यते** श्वयुवमघोनामतद्धिते । ततोऽल्लोपः । अकारस्य च लोपो भवति । ततोऽनः । अन इत्युभयोः शेषः ॥

## षपूर्वहन्धृतराज्ञामणि ॥ ६ । ४ । १३५ ॥

किमिदं षपूर्वादीनां पुनर्वचनमल्लोपार्थमाहोस्विन्नियमार्थम् । कथं चाल्लोपार्थं

---

* ७. ३. ८३. † ६. १. ८८. ‡ ६. १. ८७; ३. ४. ९३. § ६. ४. १२७*.
¶ ७. १. १*. ** ६. ४. १३४.

स्यात्कथं वा नियमार्थम् । यद्यविशेषेणाल्लोपटिलोपयोः स प्रकृतिभावस्ततोऽल्लोपार्थम्* । अथ ह्यणि टिलोपस्यैव प्रकृतिभावस्ततो नियमार्थम् ॥ अत उत्तरं पठति ।

षपूर्वादीनां पुनर्वचनमल्लोपार्थम् ॥ १ ॥

षपूर्वादीनां पुनर्वचनं क्रियतेऽल्लोपार्थम् । अविशेषेणाल्लोपटिलोपयोः प्रकृतिभावः ॥

अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः ॥ २ ॥

अवधारणे हि सत्यन्यत्र प्रकृतिभाव उपधालोपः प्रसज्येत । कथम् । यदि तावदेवं नियमः स्यात्षपूर्वादीनामेवाणीति भवेदिह नियमान्न स्यात् सामनः वैमन इति ताक्षण्य इति प्राप्नोति । अथाप्येवं नियमः स्यात्षपूर्वादीनामण्येवेत्येवमपि भवेदिह नियमान्न स्यात् ताक्षण्य इति सामनः वैमन इति तु प्राप्नोति । अथाप्युभयतो नियमः स्यात्षपूर्वादीनामेवाण्यण्येव षपूर्वादीनामित्येवमपि सामन्यः वेमन्य इति प्राप्नोति । तस्मात्सुष्ठूच्यते षपूर्वादीनां पुनर्वचनमल्लोपार्थमवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्ग इति ॥

## आतो धातोः ॥ ६ । ४ । १४० ॥

आतोऽनापः ॥ १ ॥

आतोऽनाप इति वक्तव्यम् । इहापि यथा स्यात् । समासेऽनञ्पूर्वे क्त्वो ल्यप् [७.१.३७] इति । अनाप इति किमर्थम् । खट्वायाम् मालायाम् ॥ यद्यनाप इत्युच्यते कथं क्त्वायाम् । निपातनादेतत्सिद्धम् । किं निपातनम् । क्त्वायां वा प्रतिषेध इति† ॥ यद्येवं नार्थोऽनाप इत्यनेन । कथं समासेऽनञ्पूर्वे क्त्वो ल्यबिति । निपातनादेतत्सिद्धम् । कथं हलः श्नः शानज्झौ [३.१.८३] इति । एतदपि निपातनात्सिद्धम् ॥ अथवा योगविभागः करिष्यते । आतः । आकारलोपो भवति । ततो धातोः । धातोश्चाकारस्य लोपो भवतीति ॥

## मन्त्रेष्वाङ्यादेरात्मनः ॥ ६ । ४ । १४१ ॥

मन्त्रेष्वात्मनः प्रत्ययमात्रप्रसङ्गः ॥ १ ॥

मन्त्रेष्वात्मनः प्रत्ययमात्रे लोपः प्रसङ्क्तव्यः । इहापि यथा स्यात् । त्मन्या

* ६. ४. १३४; १४४; १६७. † ६. २. २*.

समञ्जन् । त्मनोरन्तरस्थ इति ॥ यदि प्रत्ययमात्रे लोप उच्यते कथमात्मन एव निर्मिमीष्वेति । तस्मान्नार्थः प्रत्ययमात्रे लोपेन । कथं त्मन्या समञ्जन् त्मनोरन्तरस्थ इति । छान्दसत्वात्सिद्धम् । छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति ॥

आदिग्रहणानर्थक्यं चाकारप्रकरणात् ॥ २ ॥

आदिग्रहणं चानर्थकम् । किं कारणम् । आकारप्रकरणात् । आत इति* वर्तते ॥

## ति विंशतेर्डिति ॥ ६ । ४ । १४२ ॥

तिग्रहणं किमर्थं न विंशतेर्डिति लोप इत्येवोच्येत । नैवं शक्यम् । विंशतेर्डिति लोप इतीयत्युच्यमानेऽन्त्यस्य प्रसज्येत† । सिद्धोऽन्त्यस्य यस्येति‡ लोपेनैव तत्रारम्भसामर्थ्यात्तिशब्दस्य भविष्यति । कुतो नु खल्वेतदनन्त्यार्थ आरम्भे तिशब्दस्य भविष्यति न पुनरङ्गस्येति । तस्मात्तिग्रहणं कर्तव्यम् ॥ अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति । निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति ॥

## टेः ॥ ६ । ४ । १४३ ॥

अभस्योपसंख्यानं कर्तव्यम् । इहापि यथा स्यात् । उपसरजः मन्दुरज इति§ ॥ तर्हि वक्तव्यम् । न वक्तव्यम् । कथमुपसरजः मन्दुरज इति ।

डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् ॥ १ ॥

अभस्याप्यनुबन्धकरणसामर्थ्याद्भविष्यति ॥

## नस्तद्धिते ॥ ६ । ४ । १४४ ॥

नकारान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ॥ १ ॥

नकारान्तस्य टिलोपे सब्रह्मचारिन् पीठसर्पिन् कलापिन् कुथुमिन् तैतिलिन् जाजलिन् लाङ्गलिन् शिलालिन् शिखण्डिन् सूकरसद्मन् सुपर्वन्नित्येतेषामुपसंख्यानं

* ६. ४. १४०. † १. १. ५२. ‡ ६.४.१४८. § ३. २. ९७.

कर्तव्यम्* । सब्रह्मचारिन् साब्रह्मचाराः सब्रह्मचारिन् । पीठसर्पिन् पैठसर्पाः पीठसर्पिन् । कलापिन् कालापाः कलापिन् । कुथुमिन् कौथुमाः कुथुमिन् । तैतिलिन् तैतिलाः तैतिलिन् । जाजलिन् जाजलाः जाजलिन् । लाङ्गलिन् लाङ्गलाः लाङ्गलिन् । शिलालिन् शैलालाः शिलालिन् । शिखण्डिन् शैखण्डाः शिखण्डिन् । सूकरसद्मन् सौकरसद्माः सूकरसद्मन् । सुपर्वन् सौपर्वाः सुपर्वन् ॥

चर्मणः कोशे ॥ २ ॥

चर्मणः कोश उपसंख्यानं कर्तव्यम् । चार्मः कोशः ॥

अश्मनो विकारे ॥ ३ ॥

अश्मनो विकार उपसंख्यानं कर्तव्यम् । अश्मनो विकार आश्मः ॥

शुनः संकोचे ॥ ४ ॥

शौवः संकोचः ॥

अव्ययानां च

अव्ययानां चोपसंख्यानं कर्तव्यम् । किं प्रयोजनम् ।

सायंप्रातिकाद्यर्थम् ॥ ५ ॥

सायंप्रातिकः पौनःपुनिकः ॥

शाश्वतिके प्रतिषेधो वक्तव्यः । न वक्तव्यः । निपातनादेतत्सिद्धम् । किं निपातनम् । येषां च विरोधः शाश्वतिकः[२.४.९] इति । एवं तर्हि शाश्वते प्रतिषेधो वक्तव्यः । शाश्वतम् ॥

## यस्येति च ॥ ६ । ४ । १४८ ॥

इवर्णान्तस्येति किमुदाहरणम् । हे दाक्षि दाक्ष्या दाक्षेयः । हे दाक्षीति । यदि लोपो न स्यात्परस्य ह्रस्वत्वे कृते सवर्णदीर्घत्वं प्रसज्येत । दाक्ष्येति । यदि लोपो न स्यात्परस्य यणादेशे कृते पूर्वस्य श्रवणं प्रसज्येत । दाक्षेय इति । यदि लोपो न स्यात्परस्य लोपे कृते पूर्वस्य श्रवणं प्रसज्येत ॥ नैतानि सन्ति प्रयोजनानि । सवर्णदीर्घत्वेनाप्येतानि सिद्धानि ॥ इदं तर्हि । अतिसखेरागच्छति । अतिसखेः स्वम् । यदि लोपो न स्यादुपसर्जनह्रस्वत्वे कृते ऽसखीति प्रतिषेधः प्रसज्येत† ॥

* ६. ४. १६४; १६७.  † ४. १. ६२; २. २. १८; १. २. ४८; १. ४. ७.

### यस्येत्यादौ श्यां प्रतिषेधः ॥ १ ॥

यस्येत्यादौ श्यां प्रतिषेधो वक्तव्यः । काण्डे कुड्ये । सौर्ये* नाम हिमवतः शृङ्गे ॥ स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । इह श्यामित्यपि प्रकृतं नेत्यपि† तत्राभिसंबन्धमात्रं कर्तव्यम् । यस्येत्यादौ लोपो भवति श्यां न ॥

### इयङुवङ्भ्यां लोपो विप्रतिषेधेन ॥ २ ॥

इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन । इयङुवङोरवकाशः‡ । श्रियौ श्रियः । भ्रुवौ भ्रुवः । लोपस्यावकाशः । कामण्डलेयः माद्रवाहेयः§ । इहोभयं प्राप्नोति । वात्सप्रेयः लैखाभ्रेयः¶ । लोपो भवति विप्रतिषेधेन ॥

### गुणवृद्धी च ॥ ३ ॥

गुणवृद्धी चेयङुवङ्भ्यां भवतो विप्रतिषेधेन । गुणवृद्ध्योरवकाशः । चेता** गौः†† । इयङुवङोः स एव । इहोभयं प्राप्नोति । चयनम् चायकः । लवनम् लावकः । गुणवृद्धी भवतो विप्रतिषेधेन ॥

### न वेयङुवङादेशस्यान्यविषये वचनात् ॥ ४ ॥

न वार्थो विप्रतिषेधेन । किं कारणम् । इयङुवङादेशस्यान्यविषये वचनात् । इयङुवङादेशोऽन्यविषय आरभ्यते । किंविषये । यणादेशविषये । स यथैव यणादेशं बाधत एवं गुणवृद्धी अपि बाधेत ॥

### तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः ॥ ५ ॥

तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधो वक्तव्यः ॥ न वक्तव्यः । मध्येऽपवादाः पूर्वान्विधीन्बाधन्त इत्येवमियङुवङादेशो यणादेशं‡‡ बाधिष्यते गुणवृद्धी न बाधिष्यते ॥

## सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ ६ । ४ । १४९ ॥

### सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् ॥ १ ॥

सूर्यादीनामणन्तेऽप्रसिद्धिः । सौरी§§ बलाका । किं कारणम् । अङ्गान्यत्वात् । अणन्तमेतदङ्गमन्यद्भवति । लोपे¶¶ कृते नाङ्गान्यत्वम् । स्थानिवद्भावादङ्गान्यत्वं भवति ॥

---

* ४. ३. ११२; ६. ४. १४८; १४९. † ६. ४. १३६; १३७. ‡ ६. ४. ७७.
§ ४. १. १३५; ६. ४. १४७. ¶ ४. १. १२३. ** ७. ३. ८४. †† ७. १. ९०; ७. २. ११५.
‡‡ ६. १. ७७. §§ ४. ३. ११२. ¶¶ ६. ४. १४८.

सिद्धं तु स्थानिवत्प्रतिषेधात् ॥ २ ॥

सिद्धमेतत् । कथम् । स्थानिवत्प्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावो यलोपविधिं प्रति न स्थानिवद्भवतीति* ॥ एवमपि न सिध्यति । किं कारणम् । शब्दान्यत्वात् । अन्यो हि सूर्यशब्दोऽन्यः सौर्यशब्दः । नैष दोषः । एकदेशविकृतमनन्यवद्भवतीति भविष्यति ॥

उपधाग्रहणानर्थक्यं च ॥ ३ ॥

स्थानिवद्भावे चेदानीं प्रतिषिद्ध उपधाग्रहणमनर्थकम् । किं कारणम् । अन्त्य एव हि सूर्यादीनां यकारः† । किं यातमेतद्भवति । सुष्ठु च यातं साधु च यातं यदि प्राग्भादसिद्धत्वम् । अथ हि सह तेनासिद्धत्वमसिद्धत्वाल्लोपस्य नान्त्यो यकारो भवति । यद्यपि सह तेनासिद्धत्वमेवमपि न दोषः । नैवं विज्ञायते सूर्यादीनामङ्गानां यकारलोप इति । कथं तर्हि । अङ्गस्य यलोपो भवति स चेत्सूर्यादीनां यकार इति ॥ एवमपि सूर्यचरी अत्र प्राप्नोति । तस्मादुपधाग्रहणं कर्तव्यम् ॥

विषयपरिगणनं च ॥ ४ ॥

विषयपरिगणनं च कर्तव्यम् ॥

सूर्यमत्स्ययोर्ङ्याम् ॥ ५ ॥

सूर्यमत्स्ययोर्ङ्यामिति वक्तव्यम् । सौरी मत्सी ॥

सूर्यागस्त्ययोश्छे च ॥ ६ ॥

सूर्यागस्त्ययोश्छे च ङ्यां चेति वक्तव्यम् । सौरी सौरीयः । आगस्ती आगस्तीयः ॥

तिष्यपुष्ययोर्नक्षत्राणि ॥ ७ ॥

तिष्यपुष्ययोर्नक्षत्राणि‡ लोपो वक्तव्यः । तैषम् पौषम् ॥

अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ॥ ८ ॥

अन्तिकस्य तसि§ कादिलोपो वक्तव्य आद्युदात्तत्वं च वक्तव्यम् । अन्तितो न दूरात् ॥

तमे तादेश्च ॥ ९ ॥

तमे तादेश्च कादेश्च लोपो वक्तव्यः । अग्ने त्वं नो अन्तमः । अन्तितमो भवरोहति ॥

* १. १. ५८. † १. १. ६२. ‡ ४. २. ३. § ५. ४. ४५.

तसीत्येष न वक्तव्यो दृष्टो ह्याशतयेऽपि हि ।
घौ लोपोऽन्तिषदित्यत्र

अन्तिषत् ॥

तथाघौ येऽन्त्यथर्वसु ॥

अन्तिये च दूरके ॥

## बिल्वकादिभ्यश्छस्य लुक् ॥ ६ । ४ । १५३ ॥

छग्रहणं शक्यमकर्तुम् । इह कस्मान्न भवति । बिल्वकेभ्यः* । भस्येति† वर्तते ॥ एवमपि बिल्वकाय अत्र प्राप्नोति । तद्धितस्येति‡ वर्तते ॥ एवमपि बिल्वकस्य विकारोऽवयवो वा बैल्वकः§ अत्र प्राप्नोति । तद्धिते तद्धितस्येति¶ वर्तते ॥ एवमपि बिल्वकीयायां भवो बैल्वकः बैल्वकस्य किंचिद्वैल्वकीयम्** अत्र प्राप्नोति । न स बिल्वकात् । बिल्वकादिभ्यो यो विहित इत्युच्यते न चासौ बिल्वकशब्दाद्विहितः । किं तर्हि । बिल्वकीयशब्दात् ॥ एवं तर्हि सिद्धे सति यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा संनियोगशिष्टानामन्यतराभाव उभयोरप्यभाव इति । तस्माच्छग्रहणं कर्तव्यं छस्यैव लुग्यथा स्यात्कुको मा भूदिति†† ॥

## तुरिष्ठेमेयःसु ॥ ६ । ४ । १५४ ॥

तुः सर्वस्य लोपो वक्तव्योऽन्त्यस्य‡‡ लोपो मा भूदिति । स तर्हि वक्तव्यः । न वक्तव्यः ।

तुः सर्वलोपविज्ञानमन्त्यस्य वचनानर्थक्यात् ॥ १ ॥

तुः सर्वलोपो विज्ञायते । कुतः । अन्त्यस्य वचनानर्थक्यात् । अन्त्यस्य लोपवचने प्रयोजनं नास्तीति§§ कृत्वा सर्वस्य भविष्यति ॥

अथवा लुक्प्रकृतः¶¶ सोऽनुवर्तिष्यते । अशक्यो लुगनुवर्तयितुम् । किं कारणम् । विजयिष्ठकरिष्ठयोर्गुणदर्शनात् । विजयिष्ठकरिष्ठयोर्गुणो दृश्यते*** । विजयिष्ठः । आद्युतिं करिष्ठः ॥

---

* ५. ३. ८५. † ६. ४. १२९. ‡ ६. ४. १५०. § ४. ३. १४०.
¶ ६. ४. १४४; १५०. ** ४. २. ९१; ४. ३. ५३; ४. २. ११४. †† ४. २. ९१.
‡‡ १. १. ५२. §§ ६. ४. १५५. ¶¶ ६. ४. १५३. *** १. १. ६३.

## टेः ॥ ६ । ४ । १५५ ॥

**णाविष्ठवत्प्रातिपदिकस्य ॥ १ ॥**

णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः । किं प्रयोजनम् ।

**पुंवद्भावरभावटिलोपयणादिपरार्थम् ॥ २ ॥**

पुंवद्भावार्थम् । एनीमाचष्ट एतयति । श्येतयति* । रभावार्थम् । पृथुमाचष्टे प्रथयति । म्रदयति† । टिलोपार्थम् । पटुमाचष्टे पटयति । यणादिपरार्थम् । स्थूलमाचष्टे स्थवयति । दवयति‡ ॥ किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् । उदाहरणमात्रमित्याह प्रादयोऽपि हीष्यन्ते । प्रियमाचष्टे प्रापयतीति§ ॥

भारद्वाजीयाः पठन्ति । णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थमिति¶ ॥

## इष्ठस्य यिट् च ॥ ६ । ४ । १५९ ॥

किमयं यिशब्द आहोस्विद्यकारः । किं चातः । यदि लोपोऽप्यनुवर्तते** ततो यिशब्दः । अथ निवृत्तं ततो यकारः ॥

## ज्यादादीयसः ॥ ६ । ४ । १६० ॥

किमर्थं ज्यात्परस्येयस आत्त्वमुच्यते न लोपः प्रकृतः** सोऽनुवर्तेत । का रूपसिद्धिः ज्यायान् । अकृद्यकार इति दीर्घत्वं भविष्यति†† ॥ एवं तर्हि सिद्धे सति यज्ज्यात्परस्येयस आत्त्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाङ्गवृत्ते पुनर्वृत्तावविधिरिति । किमेतस्य ज्ञापने प्रयोजनम् । पिबेर्गुणप्रतिषेधश्चोदितः‡‡ स न वक्तव्यो भवति ॥

अथ किमर्थं ज्यात्परस्येयसो दीर्घ उच्यते न अकार एवोच्येत । का रूपसिद्धिः ज्यायान् । आन्तर्यतो दीर्घस्य दीर्घो भविष्यति ॥ एवं तर्हि सिद्धे सति यद्दीर्घग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति ॥

---

* ६. ३. ३५. † ६. ४. १६१. ‡ ६. ४. १६३. § ६. ४. १५७; ७. २. ११५; ७. ३. ३६.
¶ ५. ३. ६५; ६४. ** ६. ४. १५८. †† ७.४.२५. ‡‡ ७. ३. ७८*.

## र ऋतो हलादेर्लघोः ॥ ६ । ४ । १६१ ॥

कथमिदं विज्ञायते । हलादेरङ्गस्येति । आहोस्विद्धलादेर्ऋकारस्येति । युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेनाङ्गविशेषणेन भवितव्यम् । कथं ह्यृकारस्य नाम हलादिः स्यादन्यस्यान्यः । अयमादिशब्दोऽस्त्येवावयववाची । तद्यथा । ऋगादिः अर्धर्चादिः श्लोकादिरिति । अस्ति सामीप्ये वर्तते । तद्यथा । दधिभोजनमर्थसिद्धेरादिः । दधिभोजनसमीपे । घृतभोजनमारोग्यस्यादिः । घृतभोजनसमीपे । यावता सामीप्येऽपि वर्तते जायते विचारणा हल्समीपस्यर्कारस्य स्यादथवा हलादेरङ्गस्येति । किं चातः । यदि विज्ञायते हलादेरङ्गस्येति अप्रथीयान् अत्र न प्राप्नोति । अथ विज्ञायते हलादेर्ऋकारस्येति अनृचीयान् अत्रापि प्राप्नोति । उभयथा स्वृचीयानित्यत्र प्राप्नोति । यथेच्छसि तथास्तु ॥ अस्तु तावद्धलादेरङ्गस्येति । कथमप्रथीयान् । तद्धितान्तेन समासो भविष्यति । न प्रथीयानप्रथीयानिति । भवेत्सिद्धं यदा तद्धितान्तेन समासो यदा तु खलु समासात्तद्धितोत्पत्तिस्तदा न सिध्यति । नैव समासात्तद्धितोत्पत्त्या भवितव्यम् । किं कारणम् । बहुव्रीहिणोक्तत्वान्मत्वर्थस्य । भवेद्यदा बहुव्रीहिस्तदा न स्याद्यदा तु खलु तत्पुरुषस्तदा प्राप्नोति । न पृथुरपृथुः अयमप्यपृथुः अयमप्यपृथुः अयमनयोरप्रथीयानिति । न समासादजादिभ्यां भवितव्यम् । किं कारणम् । गुणवचनादित्युच्यते* न च समासो गुणवचन इति । यदा तर्हि समासाद्विन्मतुपौ विन्मतुबन्तादजादी तदा प्राप्नुतः† । अविद्यमानाः पृथवो ऽपृथवः अपृथवोऽस्य सन्त्यपृथुमान् अयमप्यपृथुमान् अयमप्यपृथुमान् अयमनयोरप्रथीयानिति । नैष दोषः । अपृथव एव न सन्ति कुतो यस्यापृथव इति ॥ इह कस्मान्न भवति । मातयति भ्रातयति । लोपो‡ ऽत्र बाधको भविष्यति । इदमिह संप्रधार्यम् । टिलोपः क्रियतां रभाव इति किमत्र कर्तव्यम् । परत्वाद्रभावः ॥ यदि पुनरवशिष्टस्य रभाव उच्येत । नैवं शक्यम् । इहापि प्रसज्येत । कृतमाचष्टे कृतयतीति ॥ एवं तर्हि परिगणनं कर्तव्यम् । पृथुमृदुकृशभृशदृढपरिवृढानामिति वक्तव्यम् ॥

## प्रकृत्यैकाच् ॥ ६ । ४ । १६३ ॥

प्रकृत्यैकाजिति किमिष्ठेमेयःस्वाहोस्विदविशेषेण । किं चातः । यद्यविशेषेण

---

* ५. ३. ५८. † ५. ३. ६५. ‡ ६. ४. १५५.

स्वी खी* शौवम्† अधुनेत्यत्रापि‡ प्राप्नोति । स्विखिनावेव न स्तः । कथम् । उक्तमेतदेकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ§ । स्ववान् खवानित्येव भवितव्यम् । शौवमिति परत्वादैजागमे¶ कृते टिलोपेन भवितव्यम् । अधुनेति सप्रकृतिकस्य सप्रत्ययकस्य स्थाने निपातनं क्रियते || इह तर्हि प्राप्नोति । ब्रव्यम्** ।

यस्येत्यादौ प्रकृतिभावः । यस्येति†† यस्य लोपप्राप्तिस्तस्य प्रकृतिभावो न चैतानि यस्येत्यादौ || एवमपि भिये हितः भीयः‡‡ ज्ञा देवतास्य स्थालीपाकस्य ज्ञः§§ स्थालीपाक इत्यत्र प्राप्नोति । तस्मादिष्ठेमेयःसु प्रकृतिभावः ||

अथेष्ठेमेयःसु प्रकृतिभावे किमुदाहरणम् । प्रेयान् प्रेष्ठः¶¶ । नैतदस्ति । प्रादीनामसिद्धत्वान्न भविष्यति || इदं तर्हि । श्रेयान् श्रेष्ठः*** ।

**प्रकृत्यैकाजिष्ठेमेयःसु चेदेकाच उच्चारणसामर्थ्यादवचनात्प्रकृतिभावः || १ ||**

प्रकृत्यैकाजिष्ठेमेयःसु चेत्तन्न । किं कारणम् । एकाच उच्चारणसामर्थ्यादन्तरेणापि वचनं प्रकृतिभावो भविष्यति ||

## विन्मतोस्तु लुगर्थम् || २ ||

विन्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः††† । स्रग्वितरः स्रजीयान् । स्रग्वितमः स्रजिष्ठः । स्रुग्वत्तरः स्रुचीयान् । स्रुग्वत्तमः स्रुचिष्ठः || ननु च विन्मतोर्लुक्टिलोपं‡‡‡ बाधिष्यते || कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् । असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यात् । यथैव खल्वपि विन्मतोर्लुक्टिलोपं बाधत एवं नस्तद्धिते [१४४] इत्येतमपि बाधेत । यतरो नौ ब्रह्मीयान् । ब्रह्मवत्तर इति || यत्तावदुच्यते कथमन्यस्योच्यमानमन्यस्य बाधकं स्यादितीदं तावदयं प्रष्टव्यः । यदि तर्हि विन्मतोर्लुग्नोच्येत किमिह स्यादिति । टिलोप इत्याह । टिलोपश्चेत्प्राप्ते टिलोपे विन्मतोर्लुगारभ्यते स बाधको भविष्यति । यदप्युच्यतेऽसति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यादिति सत्यपि संभवे बाधनं भवति । तद्यथा । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे विन्मतोर्लुक्टिलोपं बाधिष्यते । यदप्युच्यते यथैव खल्वपि विन्मतोर्लुक्टिलोपं

---

* ५. २. ११५; ६. ४. १४८. † ४. ३. १५४; ६.४.१४४. ‡ ५. ३. १७; ६. ४. १४८.
§ ५. २. ११५*. ¶ ७. ३. ४. ** ४. ३. १६१; ६. ४. १४६. †† ६. ४. १४८.
‡‡ ५. १. १; ६. ४. १४८. §§ ४. २. २४; ६. ४. १४८. ¶¶ ६. ४. १५७.
*** ५. ३. ६०. ††† ५. ३. ६५. ‡‡‡ ६. ४. १५९.

बाधत एवं नस्तद्धित इत्येतमपि बाधेतेति न बाधते । किं कारणम् । येन नाप्राप्ते तस्य बाधनम् । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते नस्तद्धित इत्येतस्मिन्पुनः प्राप्ते चाप्राप्ते च । अथवा पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त इत्येवं विन्मतोर्लुक्टिलोपं बाधिष्यते नस्तद्धित इत्येतं न बाधिष्यते ॥ यदि तर्हि विन्मतोर्लुक्टिलोपं बाधते पयिष्ठ इति न सिध्यति पयसिष्ठ इति प्राप्नोति । यथालक्षणमप्रयुक्त इति ॥

प्रकृत्याके राजन्यमनुष्ययुवानः ॥ ३ ॥

राजन्यमनुष्ययुवानोऽके प्रकृत्या भवन्तीति वक्तव्यम् । राजन्यकम्* मानुष्यकम्* यौवनिका† ॥

## न मपूर्वोऽपत्येऽवर्मणः ॥ ६ । ४ । १७० ॥

मपूर्वात्प्रतिषेधे वा हितनाम्नः ॥ १ ॥

मपूर्वात्प्रतिषेधे वा हितनाम्न इति वक्तव्यम् । आरोहितो वै हैतनामः । आरोहितो वै हैतनामनः । समानो हैतनामः । समानो हैतनामन इति च ॥

## ब्राह्मोऽजातौ ॥ ६ । ४ । १७१ ॥

अथ किमिदं ब्राह्मस्याजातावनो लोपार्थं वचनमाहोस्विन्नियमार्थम् । कथं च लोपार्थं स्यात्कथं वा नियमार्थम् । यदि तावदपत्य इति‡ वर्तते ततो नियमार्थम् । अथ निवृत्तं ततो लोपार्थम् ॥ अत उत्तरं पठति ।

ब्राह्मस्याजातौ लोपार्थं वचनम् ॥ १ ॥

ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते । अपत्य इति निवृत्तम् ॥

तत्राप्राप्तविधाने प्राप्तप्रतिषेधः ॥ २ ॥

तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य§ प्रतिषेधो वक्तव्यः । ब्राह्मणः ॥

न वा पर्युदाससामर्थ्यात् ॥ ३ ॥

न वा वक्तव्यः । किं कारणम् । पर्युदाससामर्थ्यात्पर्युदासोऽत्र भविष्यति ॥ अस्त्यन्यत्पर्युदासे प्रयोजनम् । किम् । या जातिरेव नापत्यम् । ब्राह्मयोषधिरिति ॥

---

* ४. २. ३९; (६. ४. १५१). † ५. १. १३३; (६. ४. १४४). ‡ ६. ४. १७०.
§ ६. ४. १७०; १४४.

न वा अत्रेष्यते । अनिष्टं च प्राप्नोतीष्टं च न सिध्यति ॥ एवं तर्ह्यनुवर्ततेऽपत्य इति न त्वपत्य इत्यनेन निपातनमभिसंबध्यते । ब्राह्म इति निपात्यतेऽपत्येऽजाताविति । किं तर्हि । प्रतिषेधोऽभिसंबध्यते । ब्राह्म इति निपात्यतेऽपत्ये जातौ नेति ॥

## कार्मस्ताच्छील्ये ॥ ६ । ४ । १७२ ॥

किमर्थमिदमुच्यते न नस्तद्धिते [१४४] इत्येव सिद्धम् । न सिध्यति । अनणीति* प्रकृतिभावः प्रसज्येत । अणीत्युच्यते णश्चायम्† ॥ एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यस्ताच्छीलिके णेऽण्कृतानि भवन्तीति । किमेतस्य ज्ञापने प्रयोजनम् । चौरी तापसीत्यणन्तादितीकारः सिद्धो भवति‡ ॥

## दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ ६ । ४ । १७४ ॥

अत्र भ्रौणहत्ये किं निपात्यते । यकारादौ तद्धिते तत्वं निपात्यते ।

भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् ॥ १ ॥

भ्रौणहत्ये§ तत्वनिपातनमनर्थकम् । किं कारणम् । सामान्येन कृतत्वात् । सामान्येनैवात्र तत्वं भविष्यति हनस्तोऽचिण्णलोः [७. ३. ३२] इति ॥

ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य ॥ २ ॥

एवं तर्हि ज्ञापयत्याचार्यो न तद्धिते तत्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । भ्रौणघ्नः वार्त्रघ्न इत्यत्र तत्वं न भवति ॥

ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन ॥ ३ ॥

ऐक्ष्वाकस्य¶ स्वरभेदान्निपातनं पृथक्त्वेन कर्तव्यम् । ऐक्ष्वाकः ऐक्ष्वाकः ॥

एकश्रुत्या निर्देशात्सिद्धम् ॥ ४ ॥

एकश्रुतिः स्वरसर्वनाम यथा नपुंसकं लिङ्गसर्वनाम ॥

अथ मैत्रेये किं निपात्यते ।

---

* ६. ४. १६७. † ४. ४. ६२. ‡ ४. ४. ६२; ४. १. १५. § ५. १. १२४.
¶ ४. १. १६८; ६. १. १९७; ४. ३. १२२; २.१.२.

## मैत्रेये ढञि यादिलोपनिपातनम् ॥ ५ ॥

मैत्रेये ढञि यादिलोपो निपात्यते ॥ इदं मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते । गृष्ट्यादिषु प्रत्ययविध्यर्थं पाठः क्रियते[*] । द्वितीयेऽध्याये यस्कादिषु लुगर्थं ग्रहणं क्रियते[†] । सप्तमेऽध्याय इयादेशार्थम्[‡] । इदं चतुर्थं यादिलोपार्थम् । द्विर्ग्रहणं शक्यमकर्तुम् । विदादिषु[§] प्रत्ययविध्यर्थं पाठः कर्तव्यः । तत्र नैवार्थो लुका नापि यादिलोपेन[¶] । इयादेशेनैव सिद्धम् ॥ नैवं शक्यम् । इह हि मैत्रेयकः[**] संघ इति संघाङ्कलक्षणेष्वञ्यञिञामण् [४.३.१२७] इत्यण्प्रसज्येत ॥

हिरण्मये किं निपात्यते ।

## हिरण्मये यलोपवचनम् ॥ ६ ॥

हिरण्मये यलोपो निपात्यते । हिरण्मयं कलशं बिभर्षि ॥

अथ हिरण्यये किं निपात्यते[††] ।

## हिरण्ययस्य च्छन्दसि मलोपवचनात्सिद्धम् ॥ ७ ॥

हिरण्यये छन्दसि मलोपो निपात्यते । हिरण्ययी नो नयतु । हिरण्ययाः पन्थान आसन् । हिरण्ययमासनम् ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥ पादश्च समाप्तः ॥

॥ षष्ठोऽध्यायः समाप्तः ॥

---

* ४.१.१३६. † २.४.६३. ‡ ७.३.२. § ४.१.१०४; २.४.६४.
¶ २.४.६३; ६.४.१७४. ** ४.३.१२६. †† ६.४.१७५.

## युवोरनाकौ ॥ ७ । १ । १ ॥

युवोरनाकावित्युच्यते कयोर्युवोरनाकौ भवतः । प्रत्यययोः । कथं पुनरङ्गस्येत्यनुवर्तमाने* प्रत्यययोः स्याताम् । युशब्दवुशब्दान्तमेतद्विभक्तावङ्गं भवति । यदि युशब्दवुशब्दान्तस्याङ्गस्यानाकौ भवतः सर्वादेशौ प्राप्नुतः† । निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यतः । यत्र तर्हि विभक्तिर्नास्ति । नन्दना कारिकेति‡ । अत्रापि प्रत्ययलक्षणेन विभक्तिः । यत्र तर्हि प्रत्ययलक्षणं नास्ति । नन्दनप्रियः कारकप्रिय इति§ । मा भूतां यासौ सामासिकी विभक्तिस्तस्यां यासौ समासाद्विभक्तिस्तस्यां भविष्यतः । न वै तस्यां युशब्दवुशब्दान्तमङ्गं भवति । भवेद्यो युशब्दवुशब्दाभ्यामङ्गं विशेषयेत्तस्यानन्त्ययोर्न स्यातां वयं खल्वङ्गेन युशब्दवुशब्दौ विशेषयिष्यामः । अङ्गस्य युवोरनाकौ भवतो यत्रतत्रस्थयोरिति । यत्र तर्हि समासाद्विभक्तिर्नास्ति । नन्दनदधि कारकदधि¶ ॥ एवं तर्हि

न चापरं निमित्तं संज्ञा च प्रत्ययलक्षणेन । न चेह परं निमित्तमाश्रीयते । अस्मिन्परतो युवोरनाकौ भवत इति । किं तर्हि । अङ्गस्य युवोरनाकौ भवत इति । अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन ॥ अथवा तयोरेव यदङ्गं तन्निमित्तत्वेनाश्रयिष्यामः । कथम् । अङ्गस्येति संबन्धसामान्ये षष्ठी विज्ञास्यते । अङ्गस्य यौ युवू । किं चाङ्गस्य युवू । निमित्तम् । ययोर्युवोरङ्गमित्येतद्भवति । कयोश्चैतद्भवति । प्रत्यययोः ॥

युवोरनाकाविति चेद्धातुप्रतिषेधः ॥ १ ॥

युवोरनाकाविति चेद्धातुप्रतिषेधो वक्तव्यः । युत्वा युतः युतवान् युतिः ॥

भुज्य्वादीनां च ॥ २ ॥

भुज्य्वादीनां च प्रतिषेधो वक्तव्यः । भुज्युः । कंयुः शंयुरिति** ॥

अनुनासिकपरत्वात्सिद्धम् ॥ ३ ॥

अनुनासिकपरयोर्युवोर्ग्रहणं न चैतावनुनासिकपरौ ॥ यद्यनुनासिकपरयोर्ग्रहणं

---

* ६. ४. १. † १. १. ५५. ‡ ६. १. ६८. § २. ४. ७१; १. १. ६३. ¶ ७. १. २३; १. १. ६३.
** ५. २. १३८.

नन्दनः कारकः अत्र न प्राप्नुतो न ह्येताभ्यां युशब्दवुशब्दाभ्यामनुनासिकं परं पश्यामः । अनुनासिकपरत्वादिति नैवं विज्ञायते अनुनासिकः पर आभ्यां ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति । कथं तर्हि । अनुनासिकः परोऽन्यो-स्ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति ॥ यद्यनुनासिकपरयोर्ग्रहणमित्संज्ञा प्राप्नोति* । तत्र को दोषः ।

तत्र ङीब्नुमोः प्रतिषेधः ॥ ४ ॥

ङीब्नुमोः प्रतिषेधो वक्तव्यः। नन्दनः कारकः। नन्दना कारिका । उगिल्लक्षणौ ङीब्नुमौ प्राप्नुतः† ॥

धात्वन्तस्य च ॥ ५ ॥

धात्वन्तस्य च प्रतिषेधो वक्तव्यः । दिवु सिवु ॥

षिट्टित्करणं तु ज्ञापकमुगित्कार्याभावस्य ॥ ६ ॥

यदयं युशब्दवुशब्दौ षिट्टितौ करोति शिल्पिनि ष्वुन् [३.१.१४५] ह्युट्युलौ तुट्चेति‡ तज्ज्ञापयत्याचार्यो न युवोरुगित्कार्यं भवतीति । कथं कृत्वा ज्ञापकम् । षिट्टित्करण एतत्प्रयोजनं षिट्टित इतीकारो यथा स्यात्§ । यदि चात्रोगित्कार्यं स्यात्षिट्टित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो न युवोरुगित्कार्यं भवतीति ततो युशब्दवुशब्दौ षिट्टितौ करोति ॥

न वा षित्करणं ङीष्विधानार्थम् ॥ ७ ॥

नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । षित्करणं क्रियते ङीष्विधानार्थम् । षित इति ङीष्यथा स्यात् ॥

टित्करणमनुपसर्जनार्थम् ॥ ८ ॥

टित्करणेऽप्यन्यत्प्रयोजनमस्ति । किम् । अनुपसर्जनाड्टित इतीकारो यथा स्यात् । टितोऽनुपसर्जनाद्भवत्युगित उपसर्जनाच्चानुपसर्जनाच्च ॥ एवं तर्हि

विप्रतिषेधात्तु टापो बलीयस्त्वम् ॥ ९ ॥

विप्रतिषेधात्तु टापो बलीयस्त्वं भविष्यति । टापोऽवकाशः¶ । खट्वा माला । ङीपोऽवकाशः । गोमती यवमती । इहोभयं प्राप्नोति । नन्दना कारिका । टाब्भवति

---

* १. ३. २.　† ४. १. ६; ७. १. ७०.　‡ ४. ३. २३.　§ ४. १. ४१; १५.　¶ ४. १. ४.

विप्रतिषेधेन ॥ नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते[*] पूर्वश्च टाप्परो ङीप् । ङीपः परष्टाप्करिष्यते । सूत्रविपर्यासः कृतो भवति ॥ एवं तर्ह्युगितो ङीब्भवतीत्यत्राप्यतष्टाबित्यनुवर्तिष्यते । एवमप्यकारान्तादुगित इहैव स्यात् नन्दना कारिका गोमती यवमतीत्यत्र न स्यात् ॥ एवं तर्हि संबन्धानुवृत्तिः करिष्यते । अजाद्यतष्टाप् [४.१.४] । ऋन्नेभ्यो ङीप् [५] अतष्टाप् । उगितश्च [६] ङीब्भवति अतष्टाप् । वनो र च [७] । वनो ङीब्भवति उगितोऽतष्टाप् । पादोऽन्यतरस्याम् [८] ङीब्भवति उगित अतष्टाप् । तत ऋचि[†] । ऋचि च टाब्भवति । उगितोऽत इति निवृत्तम् । तत्रायमप्यर्थो द्विष्टाब्ग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते ॥ सिध्यत्येवं यत्त्विदं वार्त्तिककारः पठति विप्रतिषेधात्तु टापो बलीयस्त्वमित्येतदसंगृहीतं भवति । एतच्च संगृहीतं भवति । कथम् । इष्टवाची परशब्दः[*] । विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥

धात्वन्तस्य चार्थवद्ग्रहणात् ॥ १० ॥

अर्थवतोर्युवोर्ग्रहणं न च धात्वन्तोऽर्थवान् ॥

नुम्विधौ झल्ग्रहणम् ॥ ११ ॥

नुम्विधौ[‡] झल्ग्रहणं कर्तव्यम् । झलन्तस्योगित इष्यते । उगिदचां सर्वनामस्थानेऽधातोर्झल इति ॥ तच्चावश्यं कर्तव्यं

लिङ्गविशिष्टप्रतिषेधार्थम् ॥ १२ ॥

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति गोमान् यवमानेवं गोमती यवमतीत्यत्रापि स्यात् ॥

न वा विभक्तौ लिङ्गविशिष्टाग्रहणात् ॥ १३ ॥

न वा वक्तव्यम् । किं कारणम् । विभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परिभाषा कर्तव्या ॥ कः पुनरत्र विशेष एषा वा परिभाषा क्रियेत झल्ग्रहणं वेति । अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि ।

प्रयोजनं श्वुनः स्वरे ॥ १४ ॥

यथेह भवति[§] शुना शुन एवं शुन्या शुन्या[¶] इत्यत्रापि स्यात् ॥

---

[*] १. ४. २. [†] ४. १. ९. [‡] ७. १. ७०. [§] ६. १. १८२.
[¶] ४. १. ४१; ३. १. ३; ६. १. १७४.

## यूनः संप्रसारणे ॥ १५ ॥

यूनः संप्रसारणे प्रयोजनम् । यथेह भवति[*] यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यात् ॥

## उगिदचां नुम्विधौ ॥ १६ ॥

उगिदचां नुम्विधौ प्रयोजनम् । यथेह भवति[†] गोमान् यवमानेवं गोमती यवमतीत्यत्रापि स्यात् ॥

## अनडुहश्चाम्विधौ ॥ १७ ॥

अनडुहश्चाम्विधौ प्रयोजनम् । यथेह भवति[‡] अनड्वानित्येवमनडुहीत्यत्रापि स्यात् । न वा भवत्यनड्वाहीति । भवत्यन्येन यत्नेन । आमनडुहः स्त्रियां वेति[§] । लिङ्गविशिष्टग्रहणादीकारान्तस्य प्राप्नोति ॥

## पथिमथोरात्त्वे ॥ १८ ॥

पथिमथोरात्त्वे प्रयोजनम् । यथेह भवति[¶] पन्थाः मन्था एवं पथी मथीत्यत्रापि प्राप्नोति । न केवलः पथिशब्दः स्त्रियां वर्तते । उपसमस्तस्तर्हि वर्तते । सुपथीति[**] ॥

## पुंसोऽसुङ्विधौ ॥ १९ ॥

पुंसोऽसुङ्विधौ प्रयोजनम् । यथेह भवति[††] पुमानेवं पुंसीत्यत्रापि स्यात् । न केवलः पुंशब्दः स्त्रियां वर्तते । उपसमस्तस्तर्हि वर्तते । सुपुंसीति ॥

## सख्युर्णित्त्वानङौ ॥ २० ॥

सख्युर्णित्त्वानङौ प्रयोजनम् । यथेह भवति[‡‡] सखा सखायौ सखाय एवं सखी सख्यौ सख्य इत्यत्रापि प्राप्नोति ॥

## भवद्भगवदघवतामोऽश्चावे ॥ २१ ॥

भवद्भगवदघवतामोऽश्चावे प्रयोजनम् । यथेह भवति[§§] भोः भगोः अघो इत्येवं भवति भगवति अघवतीत्यत्रापि स्यात् ॥

एतान्यस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या । एतस्यां च सत्यां नार्थो ह्रल्ग्रहणेन ॥

---

* ६. ४ १३३. † ७. १. ७०. ‡ ७. १. ९८. § ७. १. ९८*.
¶ ७. १. ८५. ** ५. ४. ६९; ४. १. ५; ७. १. ८८. †† ७. १. ८९.
‡‡ ७. १. ९२; ९३. §§ ८. ३. १*.

तदेतदनन्यार्थं झल्ग्रहणं कर्तव्यं नुम्प्रतिषेधो वा वक्तव्यः ॥ उभयं न वक्तव्यम् । उपरिष्टाज्झल्ग्रहणं क्रियते* तत्पुरस्तादपकृष्यते । एवमपि सूत्रविपर्यासः कृतो भवति ॥ एवं तर्हि योगविभागः करिष्यते* । उगिदचां सर्वनामस्थानेऽधातोः [७.१.७०] । युजेरसमासे [७१] । ततो नपुंसकस्य । नपुंसकस्य नुम्भवति । झल इत्युभयोः शेषः । ततोऽचः । अजन्तस्य च नपुंसकलिङ्गस्य नुम्भवति ॥

यद्यपि तावदेतदुगित्कार्यं परिहृतमिदमपरं प्राप्नोति । शातनितरा पातनितरा† । उगितो नद्या घादिषु ह्रस्वो भवतीत्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत‡ नित्यं चेष्यते । उगितो या नद्येवमेतद्विज्ञायते । उगित एषा नदी । उगितो या परा । अत्र चैव दोषो भवत्युगितो ह्येषा परा नद्येषुमतितरायां§ च प्राप्नोति । उगितः परा या विहिता । उगित एषा विहिता । उगित इत्येवं या विहिता । एवमपि भोगवतितरायां¶ दोषो भवति । भोगवतितरा भोगवतीतरा । तस्मादुगितो या नद्युगितो या विहितेत्येवमेतद्विज्ञास्यते । एवं विज्ञायमाने शातनितरायां दोष एव ॥

सिद्धं तु युवोरनुनासिकत्वात् ॥ २२ ॥

सिद्धमेतत् । कथम् । यकारवकारयोरेवेदमनुनासिकयोर्ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ॥

## आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ ७ । १ । २ ॥

आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ॥ १ ॥

आयनादिषूपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामायनादयो भवन्तीति वक्तव्यम् । किं प्रयोजनम् । स्वरसिद्ध्यर्थम् । उपदेशावस्थायामायनादिश्लिष्टः स्वरो यथा स्यादिति । शिलेयम्** तैत्तिरीयः†† । अक्रियमाणे ह्युपदेशिवद्भावे प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृत‡‡ आन्तर्यत आदेशा अस्वरकाणामस्वरकाः स्युः ॥

---

* ७. १. ७२. † ३. ३. ११७; ४. १. १५. ‡ ६. ३. ४५.
§ ५. २. ९४; ४. ३. १२०; ४. १. १५; ६. ४. १४८. ¶ ४. १. ७३.
** ५. ३. १०२ †† ४. ३. १०२. ‡‡ ३. १. ३.

न वा क्वचिच्चित्करणादुपदेशिवद्वचनानर्थक्यम् ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् । क्वचिच्चित्करणात् । यदयं क्वचिन्नादींश्चितः करोत्यमाथ्यञ्छौ च [४.४.११६; ११७] तज्ज्ञापयत्याचार्य उपदेशावस्थायामायनादयो भवन्तीति । कथं कृत्वा ज्ञापकम् । चित्करण एतत्प्रयोजनं चितः [६.१.१६३] इत्यन्तोदात्तत्वं यथा स्यादिति । यदि चोपदेशावस्थायामायनादयो भवन्ति ततश्चित्करणमर्थवद्भवति ॥

तत्रोणादिप्रतिषेधः ॥ ३ ॥

तत्रोणादीनां प्रतिषेधो वक्तव्यः । शङ्खः शण्ढ इति ॥

धातोर्वेयङ्वचनात् ॥ ४ ॥

अथवा यदयमृतेरीयङ् [३. १. २९] इति धातोरीयङं शास्ति तज्ज्ञापयत्याचार्यो न धातुप्रत्ययानामायनादयो भवन्तीति । यदि हि स्युर्ऋतेश्छङित्येव ब्रूयात् ॥ सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति न चर्तेश्छङा सिध्यति । छङि सति वलादिलक्षण इट्प्रसज्येत* । इटि कृतेऽनादित्वादादेशो न स्यात् ॥ इदमिह संप्रधार्यम् । इट्क्रियतामादेश इति किमत्र कर्तव्यम् । परत्वादिडागमः । नित्य आदेशः । कृतेऽपीटि प्राप्नोत्यकृतेऽपि । अनित्य आदेशो न हि कृत इटि प्राप्नोति । किं कारणम् । अनादित्वात् । अन्तरङ्गस्तर्ह्यादेशः । कान्तरङ्गता । इदानीमेव ह्युक्तमायनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति । तदेतदृतेरीयङ्वचनं ज्ञापकमेव न धातुप्रत्ययानामायनादयो भवन्तीति ॥

प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् ॥ ५ ॥

प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥

## झोऽन्तः ॥ ७ । १ । ३ ॥

झादेशे धात्वन्तप्रतिषेधः ॥ १ ॥

झादेशे धात्वन्तस्य प्रतिषेधो वक्तव्यः । उज्झिता उज्झितुमिति ॥ प्रत्ययाधि-

* ७. २. ३५.

कारात्सिद्धम् । प्रत्ययग्रहणं प्रकृतमनुवर्तते । क्व प्रकृतम् । आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् [७.१.२] इति ॥

प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशवचनम् ॥ २ ॥

प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशो वक्तव्यः । अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै* ॥ एवं तर्हि प्रत्ययग्रहणमनुवर्तत आदिग्रहणं निवृत्तम् । कथं पुनः समासनिर्दिष्टानामेकदेशोऽनुवर्तत एकदेशो वा निवर्तते ।

असमासनिर्देशात्सिद्धम् ॥ ३ ॥

असमासनिर्देशः करिष्यते । प्रत्ययस्यादीनामिति ॥ स तर्ह्यसमासनिर्देशः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव । कथम् । अविभक्तिको निर्देशः । प्रत्यय आदीनामिति ॥

तत्र शयान्ता इत्यनकारान्तत्वादङ्गस्याद्भावप्रतिषेधः ॥ ४ ॥

तत्रैतस्मिन्प्रत्ययग्रहणेऽनुवर्तमान आदिग्रहणे निवृत्ते शयान्ता इत्यनकारान्तत्वादङ्गस्याद्भावः प्राप्नोति† तस्य प्रतिषेधो वक्तव्यः ॥

सिद्धमनानन्तर्यादनकारान्तेनाद्भावनिवृत्तिः ॥ ५ ॥

सिद्धमेतत् । कथम् । अनानन्तर्यादनकारान्तेनाद्भावो न भविष्यति ॥

कथं कृत्वा चोदितं कथं कृत्वा परिहारः । अनकारान्तग्रहणं प्रत्ययविशेषणमिति कृत्वा चोदितं झकारविशेषणमिति कृत्वा परिहारः । यद्यनकारान्तग्रहणं झकारविशेषणं शेरते अत्र न प्राप्नोति† ।

तत्र रुटि संनियोगवचनात्सिद्धम् ॥ ६ ॥

तत्र रुटि‡ संनियोगः करिष्यते । क एष यत्नश्चोद्यते संनियोगो नाम । चकारः कर्तव्यः । रुट् । किं च । यच्चान्यत्प्राप्नोति । किं चान्यत्प्राप्नोति । अद्भावः ॥ स तर्हि चकारः कर्तव्यः । न कर्तव्यः । योगविभागः करिष्यते । शीङः । शीङ उत्तरस्य झस्याद्भवति । ततो रुट् । रुड् भवति शीङ इति ॥ एवमपि पर्यायः प्रसज्येत । एवं तर्ह्यच्छब्दस्य रुटं वक्ष्यामि । तदच्छब्दग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । अदभ्यस्तात् [७. १. ४] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । शीङ इत्येषा पञ्चम्यदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य [१. १. ६७] इति ॥

---

* ३. ४. ९४. † ७. १. ५. ‡ ७. १. ६.

## शीङो रुट् ॥ ७।१।६ ॥

### रुटि दृशिगुणप्रतिषेधः ॥ १ ॥

रुटि दृशिगुणः प्राप्नोति* । अदृभ्रन्नस्य केतव इति । तस्य प्रतिषेधो वक्तव्यः ॥ न वक्तव्यः । परस्मिन्निति क्ङिति च [१.१.५] इति प्रतिषेधो भविष्यति । एवमप्यदृभ्रमस्य केतव इत्यत्र प्राप्नोति ॥ एवं तर्हि पूर्वान्तः करिष्यते ।

### पूर्वान्ते शीङो गुणविधिः ॥ २ ॥

पूर्वान्ते शीङो गुणो विधेयः । शेरते । सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं रुटि दृशिगुणप्रतिषेध इति । पूर्वान्तेऽप्येष दोषः । कथम् । अयं दृशिगुणः प्रतिषेधविषय आरभ्यते स यथैव क्ङिति चेत्येतं प्रतिषेधं बाधत एवमनुपधाया अपि प्रसज्येत । तस्मादुभाभ्यामेव दृशेरक्प्रत्ययान्तरं वक्तव्यं पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम्† ॥

### झादेशादाड्विटि ॥ ३ ॥

झादेशादाड्विटि‡ भवति विप्रतिषेधेन । झादेशस्यावकाशः§ । लुनते लुनताम् अलुनत । आटोऽवकाशः । पताति दिद्युत् । उदधिं च्यावयाति । इहोभयं प्राप्नोति । अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै । आड्विटि भवति विप्रतिषेधेन ॥ स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।

### न वा नित्यत्वादाटः ॥ ४ ॥

न वा वक्तव्यः । किं कारणम् । नित्यत्वादाटः । नित्य आडागमः । स कथं नित्यः । यद्यनकारान्तग्रहणं झकारविशेषणम् । अथ हि प्रत्ययविशेषणं झादेशोऽपि नित्यः ॥

### अन्तरङ्गलक्षणत्वाच्च ॥ ५ ॥

अन्तरङ्गः खल्वप्याडागमः । कथमन्तरङ्गः । यदि प्राग्लादेशाद्धात्वधिकारः¶ । अथ हि लादेशे धात्वधिकारोऽनुवर्तत उभयं समानाश्रयम् ॥ यद्येवानकारान्तग्रहणं प्रत्ययविशेषणमथापि लादेशे धात्वधिकारोऽनुवर्तत उभयथापि पूर्वविप्रतिषेधेन

* ३. १. ५७; ७. १. ८; ७. ४. १६. † ३. १. ८६*. ‡ ३. ४. ९४.
§ ७. १. ५. ¶ ३. १. ९१; ३. ४. ७८.

नार्थः । कथम् । बहुलं छन्दसि [२.४.७३] इत्येवमत्र शपो लुग्भविष्यति । तत्रानत इति प्रतिषेधो भविष्यति ॥

वेत्तेर्विभाषा ॥ ७ । १ । ७ ॥

बहुलं छन्दसि ॥ ७ । १ । ८ ॥

अतो भिस ऐस् ॥ ७ । १ । ९ ॥

बहुलं छन्दसि ॥ ७ । १ । १० ॥

इदं बहुलं छन्दसीति द्विः क्रियते । एकं शक्यमकर्तुम् । कथम् । यदि तावत्पूर्वं क्रियते परं न करिष्यते । अतो भिस ऐसित्यत्र बहुलं छन्दसीत्येतदनुवर्तिष्यते । अथ परं क्रियते पूर्वं न करिष्यते । बहुलं छन्दसीत्यत्र रुडप्यनुवर्तिष्यते ॥

अपर आह । उभे बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् । कथम् । इदमस्ति । वेत्तेर्विभाषा । ततश्छन्दसि । छन्दसि च विभाषा । ततोऽतो भिस ऐस्भवति । छन्दसि विभाषेति ॥

अतो भिस ऐस् ॥ ७ । १ । ९ ॥

इह वृक्षैः प्लक्षैरिति परत्वादेत्त्वं प्राप्नोति* । ऐस्भाव इदानीं क्व भविष्यति ।

कृत एत्त्वे भौतपूर्व्यात्

कृत एत्त्वे भूतपूर्वमकारान्तमित्यैस्भविष्यति ॥

ऐस्तु नित्यस्तथा सति ॥

एवं सति नित्य ऐस्भावः । कृतेऽप्येत्त्वे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वादैस्त्वे कृते विहतनिमित्तत्वादेत्त्वं न भविष्यति ॥

एत्त्वं भिसि परत्वाच्चेदत ऐस्क्व भविष्यति ।
कृत एत्त्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥

---

* ७.३.१०३.

## नेदमदसोरकोः ॥ ७ । १ । ११ ॥

इमौ द्वौ प्रतिषेधावुच्येते । उभौ शक्याववक्तुम् । कथम् । एवं वक्ष्यामि । इद-मदसोः कादिति । तन्नियमार्थं भविष्यति । इदमदसोः कादेव नान्यत इति ॥

## टाङसिङसामिनात्स्याः ॥ ७ । १ । १२ ॥

किमर्थमिनादेश उच्यते न नादेश एवोच्येत । का रूपसिद्धिः वृक्षेण प्लक्षेण । एत्त्वे योगविभागः करिष्यते* । कथम् । इदमस्ति । बहुवचने झल्येत् [७.३.१०३] ओसि च [१०४] । तत आङि च । आङि च परतो ऽत एत्त्वं भवति । वृक्षेण प्लक्षेण । तत आपः संबुद्धौ च [१०६] । आप आङि चौसि चेति ॥ नैवं शक्यम् । इह हि अनेनेतीद्रूपलोपः प्रसज्येत† । झलि लोपः करिष्यते । न शक्यो झलि लोपः कर्तुम् । इह हि दोषः स्यात् । अया‡ विष्ठेति ॥ एवं तर्ह्य-न्लोपापवादो विज्ञास्यते§ । कथम् । एवं वक्ष्यामि । अन् ने चापि चेति । तन्न-कारग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । लुप्तनिर्दिष्टो नकारः । यद्येवं नोपधाया इति दीर्घत्वं प्राप्नोति¶ । सौत्रो निर्देशः । अथवा नपुंसकनिर्देशः करिष्यते ॥

अथ किमर्थमादुच्यते न अदेवोच्येत । का रूपसिद्धिः वृक्षात् प्लक्षात् । सव-र्णदीर्घत्वेन सिद्धम्** । न सिध्यति । अतो गुणे पररूपमिति पररूपत्वं प्राप्नोति†† । अकारोच्चारणसामर्थ्यान्न भविष्यति ॥ यदि प्राप्नुवन्विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति । नैष दोषः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधि-र्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । पररूपं प्रत्यकारोच्चारणमनर्थकं सवर्णदीर्घत्वस्य पुनर्निमित्तमेव ॥

## ङेर्यः ॥ ७ । १ । १३ ॥

किमिदं चतुर्थ्येकवचनस्य ग्रहणमाहोस्वित्सप्तम्येकवचनस्य ग्रहणम् । कुतः

---

* ७. ३. १०५. † ७. २. ११३. ‡ ७. १. ३९. § ७. २. ११२; ११३.
¶ ६. ४. ८. ** ६. १. १०१. †† ६. १. ९७.

संदेहः । समानो निर्देशः ॥ चतुर्थ्येकवचनस्य ग्रहणम् । कथं ज्ञायते । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । इहापि तर्हि चतुर्थ्येकवचनस्य ग्रहणं स्यात् । ङेराम्नद्याम्नीभ्यः [७.३.११६] ॥ एवं तर्हि व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमितीह चतुर्थ्येकवचनस्य ग्रहणं व्याख्यास्यामस्तत्र सप्तम्येकवचनस्येति ॥

## सर्वनाम्नः स्मै ॥ ७ । १ । १४ ॥

### अश एकादिष्टात्स्मायादीनामुपसंख्यानम् ॥ १ ॥

अश* एकादिष्टात्स्मायादीनामुपसंख्यानं कर्तव्यम् । अथो अत्रास्मै । अथो अत्रास्मात् । अथो अत्रास्मिन्निति । एकादेशे† कृते ऽत इति स्मायादयो न प्राप्नुवन्ति । किं पुनः कारणमेकादेशस्तावद्भवति न पुनः स्मायादयः । न परत्वात्स्मायादिभिर्भवितव्यम् । न भवितव्यम् । किं कारणम् । नित्यत्वादेकादेशः । नित्य एकादेशः । कृतेष्वपि स्मायादिषु प्राप्नोत्यकृतेष्वपि । नित्यत्वादेकादेशे कृते ऽत इति स्मायादयो न प्राप्नुवन्ति ॥ किमुच्यते ऽश इति नेहापि कर्तव्यम् । अत्रास्मै । अत्रास्मात् । अत्रास्मिन्निति । एकादेशे कृते ऽत इति स्मायादयो न प्राप्नुवन्ति । आनुपूर्व्या सिद्धमेतत् । नात्राकृतेषु स्मायादिषु हलादिर्विभक्तिरस्ति हलादौ चेद्रूपलोपो‡ न चाकृत इद्रूपलोप एकादेशः प्राप्नोति । तदानुपूर्व्या सिद्धम् ॥ तत्तर्ह्युपसंख्यानं कर्तव्यम् ॥

### न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

न वा कर्तव्यम् । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षण एकादेशः । अन्तरङ्गाः स्मायादयः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

## जसः शी ॥ ७ । १ । १७ ॥

## जश्शसोः शिः ॥ ७ । १ । २० ॥

किमर्थं शीभावः शिभावश्चोच्यते न शिभाव एवोच्येत । का रूपसिद्धिः ते ये

---

* २. ४. ३२. † ६. १. १०१. ‡ ७. २. ११३.

के । आङ्गुणेन सिद्धम्* । नैवं शक्यम् । इह हि त्रपुणी जतुनी† दीर्घश्रवणं न स्यात् ॥ एवं तर्हि शीभाव एवोच्यताम् । नैवं शक्यम् । इह हि कुण्डानि वनानीति ह्रस्वस्य श्रवणं न स्यात् ॥ तस्माच्छीभावः शिभावश्च वक्तव्यः ॥

## औङ आपः ॥ ७ । १ । १८ ॥

किमर्थो ङकारः । सामान्यग्रहणार्थः । औ इत्युच्यमाने प्रथमाद्विवचनस्यैव स्यात् । अथाप्यौडित्युच्यत एवमपि द्वितीयाद्विवचनस्यैव स्यात् ॥ अस्ति प्रयोजनमेतत् । किं तर्हीति । ङित्कार्यं तु प्राप्नोति । खट्वे माले । याडापः [७.३.११३] इति याट् प्राप्नोति । नैष दोषः । नैवं विज्ञायते ङकार इदस्य सोऽयं ङित् ङितीति । कथं तर्हि । ङ एवेन्ङित् ङितीति । एवं सति वर्णग्रहणमिदं भवति वर्णग्रहणेषु चैतद्भवति यस्मिन्विधिस्तदादावल्ग्रहण इति । न दोषो भवति ॥ अथवा वर्णग्रहणमिदं भवति न चैतद्वर्णग्रहणेषु भवत्यननुबन्धकग्रहणे न सानुबन्धकस्येति ॥ अथवा पूर्वसूत्रनिर्देशोऽयं पूर्वसूत्रेषु च येऽनुबन्धा न तैरिहेत्कार्याणि क्रियन्ते ॥

औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थस्तस्य चासञ्जनेऽस्मिन्ङित्कार्यं ते स्यां प्रसक्तं स दोषः ॥ १ ॥
ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ ।
वर्णश्चायं तेन ङित्त्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ॥ २ ॥

## अष्टाभ्य औश् ॥ ७ । १ । २१ ॥

**औशघौ**

औशघाविति वक्तव्यम् । किमिदमघाविति । अनुत्तरपद इति । किं प्रयोजनम् । इह मा भूत् । अष्टपुत्रः अष्टभार्य इति ॥

**अस्तु लुक्तत्र**

अस्त्वत्रौश्त्वं लुग्भविष्यति‡ ॥

**षड्भ्योऽप्येवं प्रसज्यते ।**

इहापि तर्हि प्राप्नोति । अष्टौ तिष्ठन्ति । अष्टौ पश्येति§ ॥

---

* ६. १. ८७. † ७. १. १९. ‡ २. ४. ७१. § ७. १. २२.

अपवादः

अपवादत्वादत्रौश्त्वं लुकं बाधिष्यते ॥ इहापि तर्हि बाधेत । अष्टपुत्रः अष्टभार्यः ।

यस्य विषये

यस्य लुको विषय औश्त्वं तस्यापवादः ॥

योवा तस्मादनन्तरः ॥ १ ॥

अथवानन्तरस्य लुको बाधकं भविष्यति । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ अथेह कस्मान्न भवत्यौश्त्वम् । अष्ट तिष्ठन्ति । अष्ट पश्येति ॥

आत्वं यत्र तु तत्रौश्त्वम्

यत्रैवात्वं तत्रैवौश्त्वेन भवितव्यम् । कुत एतत् ।

तथा ह्यस्य ग्रहः कृतः ।

तथा ह्यस्यात्वभूतस्य ग्रहणं क्रियते । अष्टाभ्य इति । ननु च नित्यमात्वम्* । एतदेव ज्ञापयत्याचार्यो विभाषात्वमिति यदयमात्वभूतस्य ग्रहणं करोति । अष्टाभ्य इति । इतरथा ह्यष्टन इत्येव ब्रूयात् ॥

औशधावस्तु लुक्तत्र षड्भ्योऽप्येवं प्रसज्यते ।
अपवादो यस्य विषये यो वा तस्मादनन्तरः ॥ १ ॥
आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ।
स्वमोर्लुक् त्यदादीनां कृते ह्यत्वे न लुग्भवेत् ॥ २ ॥

## स्वमोर्नपुंसकात् ॥ ७ । १ । २३ ॥

### स्वमोर्लुक्त्यदादिभ्यश्च ॥ १ ॥

स्वमोर्लुक्त्यदादिभ्यश्चेति वक्तव्यम् । इहापि यथा स्यात् । तद्ब्राह्मणकुलमिति । किं पुनः कारणं न सिध्यति

कृते ह्यत्वे न लुग्भवेत् ।

अत्वे† कृते लुम प्राप्नोति । इदमिह संप्रधार्यम् । अत्वं क्रियतां लुगिति किमत्र कर्तव्यम् । परात्वादत्वम् । नित्यो लुक् । कृतेऽप्यत्वे प्राप्नोत्यकृतेऽपि । अनित्यो

* ७.२.८४. † ७.२.१०२.

लुम हि कृतेऽत्वे प्राप्नोति । अतोऽम् [७.१.२४] इत्यम्भावेन भवितव्यम् । तस्मात्त्यदादिभ्यश्चेति वक्तव्यम् ॥

इदं विचार्यते शिशीलुग्नुम्विधिषु* नपुंसकग्रहणं शब्दग्रहणं वा स्यादर्थग्रहणं वेति । कश्चात्र विशेषः ।

शिशीलुमुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः ॥ २ ॥

शिशीलुमुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधो वक्तव्यः । बहुत्रपुः बहुत्रपू बहुत्रपव इति । अस्तु तर्ह्यर्थग्रहणम् ॥ यद्यर्थग्रहणं प्रियसक्थ्ना ब्राह्मणेनेत्यनङ् प्राप्नोति† । अस्तु तर्हि शब्दग्रहणमेव । ननु चोक्तं शिशीलुमुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेध इति ।

सिद्धं तु प्रकृतार्थविशेषणत्वात् ॥ ३ ॥

सिद्धमेतत् । कथम् । प्रकृतस्यार्थो विशेष्यते । किं च प्रकृतम् । अङ्गम्‡ । अङ्गस्य शिशीलुमुमो भवन्ति नपुंसके वर्तमानस्य ॥ कथं प्रियसक्थ्ना ब्राह्मणेन ।

अस्थ्यादिषु शब्दग्रहणम् ॥ ४ ॥

अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम् ॥

युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेनार्थग्रहणेन भवितव्यं न हि नपुंसकं नाम शब्दोऽस्ति । किं तर्ह्युच्यतेऽस्थ्यादिषु शब्दग्रहणमिति । अत्राप्यर्थग्रहणमेव ॥ अत्रैतावान्संदेहः क्व प्रकृतस्यार्थो विशेष्यते क्व गृह्यमाणस्येति । शिशीलुमुम्विधिषु प्रकृतस्यार्थो विशेष्यतेऽस्थ्यादिषु गृह्यमाणस्य ॥

## अद्ड्डतरादिभ्यः पञ्चभ्यः ॥ ७ । १ । २५ ॥

अड्भावे पूर्वसवर्णप्रतिषेधः ॥ १ ॥

अड्भावे पूर्वसवर्णस्य§ प्रतिषेधो वक्तव्यः । कतरत्तिष्ठति । कतरत्पश्य ॥

सिद्धमनुनासिकोपधत्वात् ॥ २ ॥

सिद्धमेतत् । कथम् । अनुनासिकोपधोऽच्छब्दः करिष्यते ॥

---

* ७. १. १९; २०; २२; ७२. † ७. १. ७५. ‡ ६. ४. १. § ६. १. १०२.

